सहिष्णुः सद्गतिः शास्ता विश्वयोनिर्महाद्युतिः । अतींद्र ऊर्जितः प्रांशुरुपेंद्रो वामनो बलिः ॥७०॥
धनुर्वेदो विधाता च ब्रह्मा विष्णुश्च शंकरः । हंसो मरीचिर्गोविंदो रत्नगर्भो महद्द्युतिः ॥७१॥
व्यासो वाचस्पतिः सर्वदर्पितासुरमर्द्दनः । जानकीवल्लभः श्रीमान् प्रकटः प्रीतिवर्द्धनः ॥७२॥
सम्भवोऽतींद्रियो वेद्यो निर्देशो जाम्बवत्प्रभुः । मदनो मन्मथो व्यापी विश्वरूपो निरंजनः ॥७३॥
नारायणोऽग्रणी साधुर्जटायुप्रीतिवर्द्धनः । नैकरूपो जगन्नाथः सुरकार्यहितः प्रभुः ॥७४॥
जितक्रोधो जितारातिः प्लवगाधिपराज्यदः । वसुदः सुभुजो नैकमायो भव्यः प्रमोदनः ॥७५॥
चण्डांशुः सिद्धिदः कल्पः शरणागतवत्सलः । अगदो रोगहर्ता च मन्त्रज्ञो मन्त्रभावनः ॥७६॥
सौमित्रिवत्सलो धुर्यो व्यक्ताव्यक्तस्वरूपधृक् । वसिष्ठो ग्रामणीः श्रीमाननुकूलः प्रियंवदः ॥७७॥
अतुलः सात्त्विको धीरः शरासनविशारदः । ज्येष्ठः सर्वगुणोपेतः शक्तिमांस्ताटकांतकः ॥७८॥
वैकुण्ठः प्राणिनां प्राणः कमठः कमलाधिपः । गोवर्धनधरो मत्स्यरूपः कारुण्यसागरः ॥७९॥
कुम्भकर्णप्रभेत्ता च गोपिगोपालसंवृतः ३०० । मायावी व्यापको व्यापी रैणुकेयबलापहः ॥८०॥
पिनाकमथनो वंद्यः समर्थो गरुडध्वजः । लोकत्रयाश्रयो लोकभरितो भरताग्रजः ॥८१॥
श्रीधरः संगतिर्लोकसाक्षी नारायणो विभुः । मनोरूपी मनोवेगी पूर्णः पुरुषपुंगवः ॥८२॥
यदुश्रेष्ठो यदुपतिर्भूतावासः सुविक्रमः । तेजोधरो धराधरश्चतुर्मूर्तिर्महानिधिः ॥८३॥
चाणूरमथनो वंद्यः शांतो भरतवंदितः । शब्दातिगो गभीरात्मा कोमलांगः प्रजागरः ॥८४॥
लोकोर्ध्वगः शेषशायी क्षीराब्धिनिलयोऽमलः । आत्मज्योतिरदीनात्मा सहस्रार्चिः सहस्रपात् ॥८५॥
अमृतांशुर्महीगर्तो निवृत्तविषयस्पृहः । त्रिकालज्ञो मुनिः साक्षी विहायसगतिः कृती ॥८६॥
पर्जन्यः कुमुदो भूतावासः कमललोचनः । श्रीवत्सवक्षाः श्रीवासो वीरहा लक्ष्मणाग्रजः ॥८७॥
लोकाभिरामो लोकारिमर्दनः सेवकप्रियः । सनातनतमो मेघश्यामलो राक्षसांतकः ॥८८॥

---

लोकोंके स्वामी, महाबाहु, अमृत, वेदज्ञोंमें श्रेष्ठ ॥ ६९ ॥ सहिष्णु, सद्गति, शासक, विश्वयोनि, परमकान्तिसम्पन्न, अतीन्द्र ( इन्द्रसे श्रेष्ठ ), तेजःसम्पन्न, सर्वोच्च, उपेन्द्र, वामन, बलि, ॥ ७० ॥ धनुर्वेदविधाता, ब्रह्मा, विष्णु, शंकर, हंस, मरीचि, गोविन्द, रत्नगर्भ, महातेजस्वी ॥ ७१ ॥ व्यास, बृहस्पति, सभी अभिमानी असुरोंके घातक, जानकीवल्लभ, श्रीमान्, प्रकट, प्रीतिवर्धन ॥ ७२ ॥ संभव, अतीन्द्रिय, वेद्य, निर्देश, जाम्बवान्‌के स्वामी, मदन, मन्मथ, सर्वव्यापी, विश्वरूप, निरञ्जन ॥ ७३ ॥ नारायण, अग्रणी, साधु, जटायुके प्रीतिवर्धक, अनेकरूप, जगन्नाथ, देवकार्यसाधक, प्रभु ॥ ७४ ॥ जितक्रोध, शत्रुविजेता, सुग्रीवराज्यदायक, वसुदाता, बहुभुज, विविधमायाधारी, भव्य, प्रमोदन ॥ ७५ ॥ चण्डांशु, सिद्धिदायक, कल्प, शरणागतवत्सल, अगद, रोगहर्ता, मन्त्रज्ञ, मंत्रभावन ॥ ७६ ॥ लक्ष्मणप्रिय, धुर्य, व्यक्त-अव्यक्तरूपधारी, वसिष्ठ, ग्रामीण, श्रीमान्, अनुकूल, प्रियवादी ॥ ७७ ॥ अतुलनीय, सात्त्विक, धीर, धनुर्विद्यामें निपुण, श्रेष्ठ, सर्वगुणसम्पन्न, शक्तिमान्, ताड़काके घातक ॥ ७८ ॥ वैकुण्ठ, प्राणियोंके प्राण, कमठ, कमलापति, गोवर्धनधारी, मत्स्यरूपधारी, करुणासागर ॥ ७९ ॥ कुम्भकर्णके नाशक, गोपीगोपालसंवृत ३००, मायावी, व्यापक , व्यापी, रेणुकेय ( परशुरामके बलनाशक ) ॥ ८० ॥ धनुषभंजक, वंद्य, समर्थ, गरुडध्वज, तीनों लोकोंके आश्रय, लोकभरित, भरतके बड़े भ्राता ॥ ८१ ॥ श्रीधर, सङ्गति, लोकसाक्षी, नारायण, विभु, मनोरूपी, मनोवेगी, पूर्ण, पुरुष-पुंगव ॥ ८२ ॥ यदुश्रेष्ठ, यदुपति, भूतावास, सुविक्रम, तेजोधर, धराधर, चतुर्मूर्ति, महानिधि ॥ ८३ ॥ चाणूरमथन, वंद्य, शान्त, भरतवन्दित, शब्दलिंग, गभीरात्मा, कोमलांग, प्रजागर ॥ ८४ ॥ लोकोर्ध्वगामी, शेषशायी, क्षीराब्धिनिलय, अमल, आत्मज्योति, अदीनात्मा, सहस्रार्चि, सहस्रचरण ॥ ८५ ॥ अमृतांशु, महीगर्त, विषयकी स्पृहासे रहित, त्रिलोकज्ञ, मुनि, साक्षी, विहायसगति, कृती ॥ ८६ ॥ पर्जन्य, कुमुद, भूतावास, कमललोचन, श्रीवत्सवक्षा, श्रीवास, वीरहा, लक्ष्मणाग्रज ॥ ८७ ॥ लोकाभिराम, लोका-

दिव्यायुधधरः श्रीमानप्रमेयो जितेंद्रियः । भूदेववंद्यो जनकप्रियकृत्प्रपितामहः ॥८९॥
उत्तमः सात्त्विकः सत्यः सत्यसन्धस्त्रिविक्रमः । सुवृत्तः सुगमः सूक्ष्मः सुघोषः सुखदः सुहृत् ॥९०॥
दामोदरोऽच्युतः शार्ङ्गी वामनो मथुराधिपः । देवकीनन्दनः शौरिः शूरः कैटभमर्दनः ॥९१॥
सप्ततालप्रभेत्ता च मित्रवंशप्रवर्धनः । कालस्वरूपी कालात्मा कालः कल्याणदः ४०० कलिः ॥९२॥
संवत्सरो ऋतुः पक्षो ह्ययनं दिवसो युगः । स्तव्यो विविक्तो निर्लेपः सर्वव्यापी निराकुलः ॥९३॥
अनादिनिधनः सर्वलोकपूज्यो निरामयः । रसो रसज्ञः सारज्ञो लोकसारो रसात्मकः ॥९४॥
सर्वदुःखातिगो विद्याराशिः परमगोचरः । शेषो विशेषो विगतकल्मषो रघुपुङ्गवः ॥९५॥
वर्णश्रेष्ठो वर्णभाव्यो वर्णो वर्णगुणोज्ज्वलः । कर्मसाक्षी गुणश्रेष्ठो देवः सुरवरप्रदः ॥९६॥
देवाधिदेवो देवर्षिर्देवासुरनमस्कृतः । सर्वदेवमयश्चक्री शार्ङ्गपाणी रघूत्तमः ॥९७॥
मनोबुद्धिरहंकारः प्रकृतिः पुरुषोऽव्ययः । न्यायो न्यायी नयी श्रीमान् नयो नगधरो ध्रुवः॥९८॥
लक्ष्मीविश्वम्भरो भर्ता देवेंद्रो बलिमर्दनः । बाणारिमर्दनो यज्वानुत्तमो मुनिसेवितः ॥९९॥
देवाग्रणीः शिवध्यानतत्परः परमः परः । सामगेयः प्रियः शूरः पूर्णकीर्तिः सुलोचनः ॥१००॥
अव्यक्तलक्षणो व्यक्तो दशास्यद्विपकेसरी । कलानिधिः कलानाथः कमलानन्दवर्द्धनः ॥१०१॥
पुण्यः पुण्याधिकः पूर्णः पूर्वः पूरयिता रविः । जटिलः कल्मषध्वांतप्रभंजनविभावसुः ॥१०२॥
जयी जितारिः सर्वादिः शमनो भवभंजनः । अलंकरिष्णुरचलो रोचिष्णुर्विक्रमोत्तमः ॥१०३॥
आशुः शब्दपतिः शब्दागोचरो रंजनो लघुः । निःशब्दपुरुषो मायो स्थूलः सूक्ष्मो ५०० विलक्षणः ॥
आत्मयोनिरयोनिश्च सप्तजिह्वः सहस्रपात् । सनातनतमः स्रग्वी पेशलो विजितांबरः ॥१०५॥
शक्तिमान् शंखभृन्नाथो गदाधररथांगभृत् । निरीहो निर्विकल्पश्च चिद्रूपो वीतसाध्वसः ॥१०६॥
सनातनः सहस्राक्षः शतमूर्तिर्घनप्रभः । हृत्पुंडरीकशयनः कठिनो द्रव एव च ॥१०७॥
सूर्यो ग्रहपतिः श्रीमान् समर्थोऽनर्थनाशनः । अधर्मशत्रू रक्षोघ्नः पुरुहूतः पुरस्तुतः ॥१०८॥

---

रिमर्दन, सेवकप्रिय, सनातनतम, मेघश्यामल, राक्षसान्तक ॥ ८८ ॥ दिव्यायुधधर, श्रीमान्, अप्रमेय, जितेन्द्रिय, विप्रवंद्य, सिताके प्रियकर्ता, प्रपितामह ॥ ८९ ॥ उत्तम, सात्त्विक, सत्य, सत्यसन्ध, त्रिविक्रम, सुवृत्त, सुगम, सूक्ष्म, सुघोष, सुखद, सुहृत् ॥ ९० ॥ दामोदर, अच्युत, शार्ङ्गी, वामन, मथुराधिपति, देवकीनन्दन, वासुदेव, शूर, कैटभमर्दन ॥ ९१ ॥ सप्ततालप्रभेत्ता, मित्रवंशवर्धन, कालस्वरूपी, कालात्मा, काल, कल्याणद ४०० कलि, ॥ ९२ ॥ संवत्सर, ऋतु, पक्ष, अयन, युग, स्तव्य, विविक्त, निर्लेप, सर्वव्यापी, निराकुल ॥ ९३ ॥ अनादिनिधन, सर्वलोकपूज्य, निरामय, रस, रसज्ञ, सारज्ञ, लोकसार, रसात्मक ॥ ९४ ॥ सर्वदुःखातिग, विद्याराशि, परमगोचर, शेष, विशेष, विगतकल्मष, रघुपुङ्गव, ॥ ९५ ॥ वर्णश्रेष्ठ, वर्णभाव्य, वर्ण, वर्णगुणोज्ज्वल, कर्मसाक्षी, गुणश्रेष्ठ, देव, सुखप्रद ॥ ९६ ॥ देवाधिदेव, देवर्षि, देवासुरनमस्कृत, सर्वदेवमय, चक्री, शार्ङ्गपाणि, रघूत्तम, ॥ ९७ ॥ मन-बुद्धि-अहंकार, प्रकृति, पुरुष, अव्यय, न्याय, न्यायी, नयी, श्रीमान्, नय, नगधर, ध्रुव, ॥ ९८ ॥ लक्ष्मी-विश्वम्भर, भर्ता, देवेन्द्र, बलिमर्दन, बाणारिमर्दन, यज्वा, उत्तम, मुनिसेवित ॥ ९९ ॥ देवाग्रणी, शिवध्यानतत्पर, परम, पर, सामगेय, प्रिय, शूर, पूर्णकीर्ति, सुलोचन ॥ १०० ॥ अव्यक्तलक्षण, व्यक्त, दशास्यद्विपकेसरी, कलानिधि, कलानाथ, कमलानन्दवर्धन ॥ १०१ ॥ पुण्याधिक, पूर्ण, पूरयिता, रवि, जटिल, कल्मषोंको ध्वस्त करनेवाले, अग्नि ॥ १०२ ॥ जयी, जितारि, सर्वादि, शमन, भवभञ्जन, अलंकरिष्णु, अचल, रोचिष्णु, विक्रमोत्तम ॥ १०३ ॥ आशु, शब्दपति, शब्दागोचर, रंजन, लघु, निःशब्द, पुरुष, मायी, स्थूल, सूक्ष्म ५००, विलक्षण ॥१०४॥ आत्मयोनि, अयोनि, सप्तजिह्व, सहस्रपात्, सनातनतम, स्रग्वी, पेशल, विजिताम्बर ॥ १०५ ॥ शक्तिमान्, शंखभृत्, नाथ, गदाधर, रथांगभृत्, निरीह, निर्विकल्प, चिद्रूप, वीतसाध्वस ॥ १०६ ॥ सनातन,

ब्रह्मगर्भो बृहद्गर्भो धर्मधेनुर्धनागमः । हिरण्यगर्भो ज्योतिष्मान् सुललाटः सुविक्रमः ॥१०९॥
शिवपूजारतः श्रीमान् भवानीप्रियकृद्वशी । नरो नारायणः श्यामः कपर्दी नीललोहितः ॥११०॥
रुद्रः पशुपतिः स्थाणुर्विश्वामित्रो द्विजेश्वरः । मातामहो मातरिश्वा विरिंचिर्विष्टरश्रवाः ॥१११॥
अक्षोभ्यः सर्वभूतानां चण्डः सत्यपराक्रमः । वालखिल्यो महाकल्पः कल्पवृक्षः कलाधरः ॥११२॥
निदाघस्तपनो मेघः शुक्रः परबलापहृत् । वसुश्रवाः कव्यवाहः प्रतप्तो विश्वभोजनः ॥११३॥
रामो नीलोत्पलश्यामो ज्ञानस्कंदो महाद्युतिः । कबन्धमथनो दिव्यः कम्बुग्रीवः शिवप्रियः ॥ ११४॥
सुखी नीलः सुनिष्पन्नः सुलभः शिशिरात्मकः । असंसृष्टोऽतिथिः शूरः प्रमाथी पापनाशकृत् ॥११५॥
पवित्रपादः पापारिर्मणिपूरो नभोगतिः । उत्तारणो दुष्कृतिहा दुर्धर्षो दुःसहो बलः ६००॥११६।
अमृतेशोऽमृतवपुर्धर्मी धर्मः कृपाकरः । भगो विवस्वानादित्यो योगाचार्यो दिवस्पतिः॥११७।
उदारकीर्तिरुद्योगी वाङ्मयः सदसन्मयः । नक्षत्रमानी नाकेशः स्वाधिष्ठानः षडाश्रयः ॥११८॥
चतुर्वर्गफलं वर्णशक्तित्रयफलं निधिः । निधानगर्भो निर्व्याजो निरीशो व्यालमर्दनः ॥११९॥
श्रीवल्लभः शिवारम्भः शांतो भद्रः समंजसः । भूशायी भूतकृद्भूतिर्भूषणो भूतवाहनः ॥१२०।
अकायो भक्तकायस्थः कालज्ञानी महापटुः । परार्धवृत्तिरचलो विविक्तः श्रुतिसागरः ॥१२१॥
स्वभावभद्रो मध्यस्थः संसारभयनाशनः । वेद्यो वैद्यो वियद्गोप्ता सर्वामरमुनीश्वरः ॥१२२॥
सुरेन्द्रः कारणं कर्मकरः कर्मी ह्यधोक्षजः । धैर्योऽग्रधुर्यो धात्रीशः संकल्पः शर्वरीपतिः ॥१२३॥
परमार्थगुरुर्दृष्टिः सुचिराश्रितवत्सलः । विष्णुर्जिष्णुर्विभुर्यज्ञो यज्ञेशो यज्ञपालकः ॥१२४॥
प्रभुर्विष्णुर्ग्रसिष्णुश्च लोकात्मा लोकपालकः । केशवः केशिहा काव्यः कविः कारणकारणम् ॥१२५॥
कालकर्ता कालशेषो वासुदेवः पुरुष्टुतः । आदिकर्ता वराहश्च वामनो मधुसूदनः ॥१२६॥
नारायणो नरो हंसो विष्वक्सेनो जनार्दनः । विश्वकर्ता महायज्ञो ज्योतिष्मान्पुरुषोत्तमः ७००।१२७

---

सहस्राक्ष, शतमूर्ति, धनप्रद, हृत्पुण्डरीकशयन, कठिन, द्रव ॥ १०७ ॥ सूर्य, ग्रहपति, श्रीमान्, समर्थ, अनर्थनाशन, अधर्मशत्रु, रक्षोघ्न, पुरुहूत, पुरुष्टुत, ॥ १०८ ॥ ब्रह्मगर्भ, बृहद्गर्भ, धर्मधेनु, धनागम, हिरण्यगर्भ, ज्योतिष्मान्, सुललाट, सुविक्रम ॥ १०९ ॥ शिवपूजारत, श्रीमान्, भवानीप्रियकृत्, वशी, नर, नारायण, श्याम, कपर्दी, नीललोहित, ॥ ११० ॥ रुद्र, पशुपति, स्थाणु, विश्वामित्र, द्विजेश्वर, मातामह, मातरिश्वा, विरिञ्च, विष्टरश्रवा ॥ १११ ॥ अक्षोभ्य, चण्ड, सत्यपराक्रम, वालखिल्य, महाकल्प, कल्पवृक्ष, कलाधर ॥ ११२ ॥ निदाघ, तपन, मेघ, शुक्र, परबलापहारी, वसुश्रवा, हव्यवाह, प्रतप्त, विश्वभोजन ॥ ११३ ॥ राम, नीलोत्पलश्याम, ज्ञानस्कन्द, महाद्युति, कबन्धमथन, दिव्य, कम्बुग्रीव, शिवप्रिय, ॥ ११४ ॥ सुखी, नील, सुनिष्पन्न, सुलभ, शिशिरात्मक, असंसृष्ट, अतिथि, शूर, प्रमाणी, पापनाशकारी ॥ ११५ ॥ पवित्रपाद, पापारि, मणिपूर, नभोगति, उत्तारण, दुर्धर्ष, दुःसह, बल ६०० ॥ ११६ ॥ अमृतेश, अमृतवपु, धर्मी, कृपाकर, भग, विवस्वान्, आदित्य, योगाचार्य, दिवस्पति ॥ ११७ ॥ उदारकीर्ति, उद्योगी, वाङ्मय, सदसन्मय, नक्षत्रमानी, नाकेश, स्वाधिष्ठान, षडाश्रय ॥ ११८ ॥ चतुर्वर्गफल, वर्णशक्तित्रयफल, निधि, निधानगर्भ, निर्व्याज, निरीश, व्यालमर्दन ॥ ११९ ॥ श्रीवल्लभ, शिवारम्भ, शान्त, भद्र, समंजस, भूशायी, भूति, भूतवाहन ॥ १२० ॥ अव्यय, भक्तकायस्थ, कालज्ञानी, महापटु, परार्थवृत्ति, अचल, विविक्त, श्रुतिसागर ॥ १२१ ॥ स्वभावभद्र, मध्यस्थ, संसारभयनाशन, वेद्य, वैद्य, वियद्गोप्ता, सर्वामरमुनीश्वर ॥ १२२ ॥ सुरेन्द्र, कारण, कर्मकर, कर्मी, अधोक्षज, धैर्य, उग्रधुर्य, धात्रीश, संकल्प, शर्वरीपति ॥ १२३ ॥ परमार्थगुरु, दृष्टि, सुचिराश्रितवत्सल, विष्णु, जिष्णु, विभु, यज्ञ, यज्ञेश, यज्ञपालक ॥ १२४ ॥ प्रभु, विष्णु, ग्रसिष्णु, लोकात्मा, लोकपालक, केशव, केशिहा, काव्य, कवि, कारणकारण ॥ १२५ ॥ कालकर्ता, कालशेष, वासुदेव, पुरुष्टुत, आदिकर्ता, वराह, वामन, मधुसूदन ॥ १२६ ॥ नारायण, नर, हंस, विष्वक्सेन, जनार्दन, विश्वकर्ता, महायज्ञ, ज्योतिष्मान्,

वैकुण्ठः पुण्डरीकाक्षः कृष्णः सूर्यः सुरार्चितः । नारसिंहो महाभीमो वज्रदंष्ट्रो नखायुधः ॥१२८॥
आदिदेवो जगत्कर्ता योगीशो गरुडध्वजः । गोविन्दो गोपतिर्गोप्ता भूपतिर्भुवनेश्वरः ॥१२९॥
पद्मनाभो हृषीकेशो धाता दामोदरः प्रभुः । त्रिविक्रमस्त्रिलोकेशो ब्रह्मेशः प्रीतिवर्धनः ॥१३०॥
संन्यासी शास्त्रतत्त्वज्ञो मन्दिरो गिरिशो नतः । वामनो दुष्टदमनो गोविन्दो गोपवल्लभः ॥१३१॥
भक्तप्रियोऽच्युतः सत्यः सत्यकीर्तिर्धृतिः स्मृतिः। कारुण्यः करुणो व्यासः पापहा शांतिवर्द्धनः १३२॥
बदरीनिलयः शान्तस्तपस्वी वैद्युतः प्रभुः । भूतावासो महावासा श्रीनिवासः श्रियः पतिः॥१३३॥
तपोवासो मुदावासः सत्यवासः सनातनः । पुरुषः पुष्करः पुण्यः पुष्कराक्षो महेश्वरः ॥१३४॥
पूर्णमूर्तिः पुराणज्ञः पुण्यदः प्रीतिवर्धनः । पूर्णरूपः कालचक्रप्रवर्तनसमाहितः ॥१३५॥
नारायणः परं ज्योतिः परमात्मा सदाशिवः । शंखी चक्री गदी शार्ङ्गी लांगूली मुसली हली ॥१३६॥
किरीटी कुंडली हारी मेखली कवची ध्वजी । योद्धा जेता महावीर्यः शत्रुघ्नः शत्रुतापनः ॥१३७॥
शास्ता शास्त्रकरः शास्त्रं शंकरः शंकरस्तुतः । सारथी सात्त्विकः स्वामी सामवेदप्रियः समः ८००॥
पवनः संहितः शक्तिः सम्पूर्णाङ्गः समृद्धिमान् । स्वर्गदः कामदः श्रीदः कीर्तिदः कीर्तिदायकः ॥१३९॥
मोक्षदः पुण्डरीकाक्षः क्षीराब्धिकृतकेतनः । सर्वात्मा सर्वलोकेशः प्रेरकः पापनाशनः ॥१४०॥
वैकुंठः पुण्डरीकाक्षः सर्वदेवनमस्कृतः । सर्वव्यापी जगन्नाथः सर्वलोकमहेश्वरः ॥१४१॥
सर्गस्थित्यन्तकृद्देवः सर्वलोकसुखावहः । अक्षयः शाश्वतोऽनन्तः क्षयवृद्धिविवर्जितः ॥१४२॥
निर्लेपो निर्गुणः सूक्ष्मो निर्विकारो निरंजनः । सर्वोपाधिविनिर्मुक्तः सत्तामात्रव्यवस्थितः ॥१४३॥
अधिकारी विभुर्नित्यः परमात्मा सनातनः । अचलो निश्चलो व्यापी नित्यतृप्तो निराश्रयः॥१४४॥
श्यामी युवा लोहिताक्षो दीप्त्या शोभितभाषणः । आजानुबाहुः सुमुखः सिंहस्कन्धो महाभुजः ॥१४५॥
सत्त्ववान् गुणसंपन्नो दीप्यमानः स्वतेजसा । कालात्मा भगवान् कालः कालचक्रप्रवर्तकः ॥१४६॥

---

पुरुषोत्तम ७०० ॥ १२७ ॥ वैकुण्ठ, पुण्डरीकाक्ष, कृष्ण, सूर्य, सुरार्चित, नारसिंह, महाभीम, वज्रदंष्ट्र, नखायुध ॥ १२८ ॥ आदिदेव, जगत्कर्ता, योगीश, गरुडध्वज, गोविन्द, गोपति, गोप्ता, भूपति, भुवनेश्वर ॥ १२९ ॥ पद्मनाभ, हृषीकेश, धाता, दामोदर, प्रभु, त्रिविक्रम, त्रिलोकेश, ब्रह्मेश, प्रीतिवर्धन ॥ १३० ॥ संन्यासी, शास्त्रतत्त्वज्ञ, मन्दर, गिरीश, नत, वामन, दुष्टदमन, गोविन्द, गोपवल्लभ, ॥ १३१॥ भक्तिप्रिय, अच्युत, सत्य, सत्यकीर्ति, धृति, स्मृति, कारुण्य, करुण, व्यास, पापहा, शान्तिवर्द्धन ॥ १३२ ॥ बदरीनिलय, शान्ति, तपस्वी, वैद्युत, प्रभु, भूतावास, महावास, श्रीनिवास, श्रीपति ॥ १३३ ॥ तपोवास, मुदावास, सत्यवास, सनातन, पुष्कर, पुण्य, पुष्कराक्ष, महेश्वर ॥ १३४ ॥ पूर्णमूर्ति, पुराणज्ञ, पुण्यज्ञ, प्रीतिवर्द्धन, पूर्णरूप, कालचक्रप्रवर्तन, समाहित ॥ १३५ ॥ नारायण, परंज्योति, परमात्मा, सदाशिव, शंखी, चक्री, गदी, शार्ङ्गी, लांगूली, मुसली, हली ॥ १३६ ॥ किरीटी, कुण्डली, हारी, मेखली, कवची, ध्वजी, योद्धा, जेता, महावीर्य, शत्रुघ्न, शत्रुतापन ॥ १३७ ॥ शास्ता, शास्त्रकर, शास्त्र, शंकर, शंकरस्तुत, सारथी, सात्त्विक, स्वामी, सामवेदप्रिय, सम ८०० ॥ १३८ ॥ पवन, संहति, शक्ति, सम्पूर्णाङ्ग, समृद्धिमान्, स्वर्गद, कामद, श्रीद, कीर्तिद, कीर्तिदायक ॥ १३९ ॥ मोक्षद, पुण्डरीकाक्ष, क्षीराब्धिकृतकेतन, सर्वात्मा, सर्वलोकेश, प्रेरक, पापनाशन ॥ १४० ॥ वैकुण्ठ, पुण्डरीकाक्ष, सर्वदेवनमस्कृत, सर्वव्यापी, जगन्नाथ, सर्वलोकमहेश्वर ॥ १४१ ॥ सर्ग-स्थितिअन्तकृत्, देव, सर्वलोकसुखावह, अक्षय, शाश्वत, अनन्त क्षयवृद्धिविवर्जित ॥ १४२ ॥ निर्लेप, निर्गुण, सूक्ष्म, निर्विकार, निरञ्जन, सर्वोपाधिविनिर्मुक्त, सत्तामात्रव्यवस्थित ॥ १४३ ॥ अविकारी, विभु, नित्य, परमात्मा, सनातन, अचल, निश्चल, व्यापी, नित्यतृप्त, निराश्रय ॥ १४४ ॥ श्याम, युवा, लोहिताक्ष, शोभितभाषण, आजानुबाहु, सुमुख, सिंहस्कन्ध, महाभुज ॥ १४५ ॥ सत्त्ववान्, गुणसम्पन्न, अपने तेजसे दीप्यमान, कालात्मा, भगवान्, काल,

नारायणः परं ज्योतिः परमात्मा सनातनः । विश्वकृद्विश्वभोक्ता च विश्वगोप्ता च शाश्वतः ॥ १४७॥
विश्वेश्वरो विश्वमूर्तिर्विश्वात्मा विश्वभावनः । सर्वभूतसुहृच्छांतः सर्वभूतानुकंपनः ॥१४८॥
सर्वेश्वरः सर्वशर्वः सर्वदाऽऽश्रितवत्सलः । सर्वगः सर्वभूतेशः सर्वभूताशयस्थितः ॥१४९॥
अभ्यंतरस्थस्तमसश्छेत्ता नारायणः परः । अनादिनिधनः स्रष्टा प्रजापतिपतिर्हरिः ॥१५०॥
नरसिंहो हृषीकेशः सर्वात्मा सर्वदृग्वशी । जगतस्तस्थुषश्चैव प्रभुर्नेता सनातनः ९०० ॥१५१॥
कर्ता धाता विधाता च सर्वेषां पतिरीश्वरः । सहस्रमूर्धा विश्वात्मा विष्णुर्विश्वदृगव्ययः ॥१५२॥
पुराणपुरुषः श्रेष्ठः सहस्राक्षः सहस्रपात् । तत्त्वं नारायणो विष्णुर्वासुदेवः सनातनः ॥१५३॥
परमात्मा परं ब्रह्म सच्चिदानंदविग्रहः । परं ज्योतिः परं धाम पराकाशः परात्परः ॥१५४॥
अच्युतः पुरुषः कृष्णः शाश्वतः शिव ईश्वरः । नित्यः सर्वगतः स्थाणू रुद्रः साक्षी प्रजापतिः ॥१५५॥
हिरण्यगर्भः सविता लोककृल्लोकभृद्विभुः । ॐकारवाच्यो भगवान्श्रीभूलीलापतिः प्रभुः ॥१५६॥
सर्वलोकेश्वरः श्रीमान् सर्वज्ञः सर्वतोमुखः । स्वामी सुशीलः सुलभः सर्वगः सर्वशक्तिमान् ॥१५७॥
नित्यः संपूर्णकामश्च नैसर्गिकसुहृत्सुखी । कृपापीयूषजलधिः शरण्यः सर्वशक्तिमान् ॥१५८॥
श्रीमान्नारायणः स्वामी जगतां प्रभुरीश्वरः । मत्स्यः कूर्मो वराहश्च नारसिंहोऽथ वामनः ॥१५९॥
रामो रामश्च कृष्णश्च बौद्धः कल्की परात्परः । अयोध्येशो नृपश्रेष्ठः कुशबालः परंतपः ॥१६०॥
लवबालः कंजनेत्रः कंजांघ्रिः पंकजाननः । सीताकांतः सौम्यरूपः शिशुजीवनतत्परः ॥१६१॥
सेतुकृच्चित्रकूटस्थः शबरीसंस्तुतः प्रभुः । योगिध्येयः शिवध्येयः शास्ता रावणदर्पहा ॥१६२॥
श्रीशः शरण्यो भूतानां संश्रिताभीष्टदायकः । अनंतः श्रीपती रामो गुणभृन्निर्गुणो महान् १००० ॥
एवमादीनि नामानि ह्यसंख्यान्यपराणि च । एकैकं नाम रामस्य सर्वपापप्रणाशनम् ॥१६४॥
सहस्रनामफलदं सर्वैश्वर्यप्रदायकम् । सर्वसिद्धिकरं पुण्यं भुक्तिमुक्तिफलप्रदम् ॥१६५॥

---

कालचक्रप्रवर्तक ॥ १४६ ॥ नारायण, परंज्योति, परमात्मा, सनातन, विश्वकृत्, विश्वभोक्ता, विश्वगोप्ता, शाश्वत ॥ १४७ ॥ विश्वेश्वर, विश्वमूर्ति, विश्वात्मा, विश्वभावन, सर्वभूतसुहृत्, शान्त, सर्वभूतानुकम्पन ॥१४८॥ सर्वेश्वर, सर्वशर्व, सर्वदा आश्रितवत्सल, सर्वग, सर्वभूतेश, सर्वभूताशयस्थित ॥ १४९ ॥ अभ्यन्तरस्थ, अन्धकारनाशक, नारायण, पर, अनादिनिधन, स्रष्टा, प्रजापति, हरि ॥ १५० ॥ नरसिंह, हृषीकेश, सर्वात्मा, सर्वदृक्, वशी, स्थावर तथा जंगम विश्वके प्रभु, नेता, सनातन ९०० ॥ १५१ ॥ कर्ता, धाता, विधाता, सबके पति, ईश्वर, सहस्रमूर्धा, विश्वात्मा, विष्णु, विश्वदृक्, अव्यय ॥ १५२ ॥ पुराणपुरुष, श्रेष्ठ, सहस्राक्ष, सहस्रपात्, तत्त्व, विष्णु, नारायण, वासुदेव, सनातन ॥ १५३ ॥ परमात्मा, परब्रह्म, सच्चिदानन्दविग्रह, परंज्योति, परंधाम, पराकाश, परात्पर ॥ १५४ ॥ अच्युत, कृष्ण, शाश्वत, शिव, ईश्वर, नित्य, सर्वगत, स्थाणु, रुद्र, साक्षी, प्रजापति ॥ १५५ ॥ हिरण्यगर्भ, सविता, लोककृत्, विभु, ॐकारवाच्य, भगवान्, श्रीभूलीलापति, प्रभु ॥ १५६ ॥ सर्वलोकेश्वर, श्रीमान्, सर्वज्ञ, सर्वतोमुख, स्वामी, सुशील, सर्वग, सर्व- सर्वशक्तिमान्, प्रभु ॥ १५७ ॥ सम्पूर्णकाम, नैसर्गिकसुहृद्, सुखी, कृपापीयूषजलधि, सबके शरण्य ॥ १५८ ॥ श्रीमान्, नारायण, स्वामी, सब भुवनोंके प्रभु, ईश्वर, मत्स्य, कूर्म, वराह, नृसिंह, वामन ॥ १५९ ॥ राम, कृष्ण, बौद्ध, कल्की, परात्पर, अयोध्येश, नृपश्रेष्ठ, कुशके पिता, परन्तप ॥ १६० ॥ लवके पिता, सेतुकृत्, चित्रकूटस्थ, कमलनयन, कमलचरण, कमलमुख, सीताकान्त सौम्यरूप, शिशुजीवनतत्पर ॥ १६१ ॥ शबरीसंस्तुत, प्रभु, योगिध्येय, शिवध्येय, शास्ता, रावणदर्पहा ॥ १६२ ॥ श्रीश, शरण्य, आश्रितोंके अभीष्टदायक, अनन्त, श्रीपति, राम, गुणभृत्, निर्गुण, महान् १००० ॥ १६३ ॥ यहाँ रामसहस्रनाम पूर्ण हुआ। इसी तरह और भी भगवान्के बहुतसे नाम हैं, जिनकी गणना ही नहीं की जा सकती। रामका एक-एक नाम सब प्रकारके पापोंको हरने तथा सहस्रनामका फल देनेवाला है। यह रामनाम सब प्रकारकी समृद्धियों एवं

मन्त्रात्मकमिदं सर्वं व्याख्यातं सर्वमंगलम् । उक्तानि तव पुत्रेण विघ्नराजेन धीमता ॥१६६॥
सनत्कुमाराय पुरा तान्युक्तानि मया तव । यः पठेच्छृणुयाद्वापि स तु ब्रह्मपदं लभेत् ॥१६७॥
तावदेव बलं तेषां महापातकदंतिनाम् । यावन्न श्रूयते रामनामपंचाननध्वनिः ॥१६८॥
ब्रह्मघ्नश्च सुरापश्च स्तेयी च गुरुतल्पगः । शरणागतघाती च मित्रविश्वासघातकः ॥१६९॥
मातृहा पितृहा चैव भ्रूणहा वीरहा तथा । कोटिकोटिसहस्राणि ह्युपपापानि यान्यपि ॥१७०॥
संवत्सरं क्रमाज्जप्त्वा प्रत्यहं रामसन्निधौ । निष्कण्टकं सुखं भुक्त्वा ततो मोक्षमवाप्नुयात् ॥१७१॥

सूत उवाच

एवं शौनक पार्वत्यै रामनामसहस्रकम् । यथा शिवेन कथितं मया तेऽद्य निवेदितम् ॥१७२॥

श्रीरामदास उवाच

यथा शिष्य त्वया पृष्टं रामनमसहस्रकम् । तत्त्वतोक्तं सविस्तारं मया तेऽद्य निवेदितम् ॥१७३॥
अनेन रामं सदसि नारदः स्तुतवान्मुनिः । रामनामसहस्रेण भुक्तिमुक्तिप्रदेन च ॥१७४॥
श्रीरामनाम्नां परमं सहस्रकं पापापहं सौख्यविवृद्धिकारकम् ।
भवापहं भक्तजनैकपालकं स्त्रीपुत्रपौत्रप्रदमृद्धिदायकम् ॥१७५॥

इति श्रीशतकोटिरामचरितांतर्गते श्रीमदानन्दरामायणे वाल्मीकीये राज्यकाण्डे पूर्वार्धे रामसहस्रनामकथनं नाम प्रथमः सर्गः ॥ १ ॥

## द्वितीयः सर्गः

### ( कल्पवृक्ष और पारिजातके पृथ्वीपर आनेका कारण )

विष्णुदास उवाच

गुरो त्वया रामनामसहस्रं राघवस्य च । ध्यानं कल्पतरोर्मूले कथितं स्वर्णपीठके ॥ १ ॥

---

सिद्धियोंका करनेवाला और भुक्ति-मुक्तिका दाता है। हे पार्वति ! मैंने अभी जो सहस्रनाम तुम्हें बतलाया है, यह मन्त्रात्मक और सर्वमंगलकारक है। इसे तुम्हारे पुत्र गणेशजीने स्वयं सनत्कुमारको बतलाया था। उसे मैंने आज तुमसे कहा है। जो कोई इस सहस्रनामको पढ़ता और सुनता है, उसे ब्रह्मपद प्राप्त होता है ॥ १६४–१६७ ॥ महापातकरूपी मतवाले हाथियोंका बल तभी तक रहता है, जब तक रामनामरूपी पंचानन ( सिंह ) की गर्जना नहीं सुनायी देती ॥ १६८ ॥ जो मनुष्य ब्रह्महत्यारा, मद्यप, गुरुकी शय्यापर शयन करनेवाला तथा चोर हो। जो शरणागतको मारनेवाला, मित्रके साथ विश्वासघात करनेवाला, माता, पिता, भ्रूण ( गर्भस्थ संतान ) तथा वीर मनुष्यकी हत्या करनेवाला हो तथा जिसने संसारमें करोड़ों पाप किये हों, वह भी यदि श्रीरामके पास बैठकर एक संवत्सर पर्यन्त प्रतिदिन इस स्तोत्रका पाठ करे तो संसारमें निष्कंटक सुख भोगकर अन्तमें मोक्ष पाता है ॥ १६९ ॥ १७० ॥ सूतजी बोले—हे शौनक ! शिवजीने पार्वतीको जिस प्रकार रामका सहस्रनाम सुनाया था, वही मैंने आज तुम्हें बताया है ॥ १७१ ॥ श्रीरामदासने कहा—हे शिष्य ! जैसे तुमने हमसे रामका सहस्रनाम पूछा, वैसे मैंने तुम्हें बतलाया। इसी सहस्रनामसे नारदने सभामें रामजीकी स्तुति की थी। क्योंकि यह स्तोत्र भुक्ति-मुक्ति सब कुछ देनेवाला है ॥ १७२–१७४ ॥ यह रामका सहस्रनाम पापोंका नाशक, सौख्यवर्द्धक, सांसारिक पापोंका नाशक, भक्तजनोंका पालक और स्त्री-पुत्र-पौत्र तथा सम्पत्तिका देनेवाला है ॥ १७५ ॥ इति श्रीशतकोटिरामचरितान्तर्गते श्रीमदानन्दरामायणे पं० रामतेज-पाण्डेयविरचित'ज्योत्स्ना'भाषाटीकासहिते राज्यकाण्डे पूर्वार्द्धे प्रथमः सर्गः ॥ १ ॥

श्रीविष्णुदासने कहा—हे गुरो ! आपने रामका सहस्रनाम बताते समय कहा था कि कल्पवृक्षके नीचे

संदेहस्तेन मे जातः कल्पवृक्षः कथं भुवि । अयोध्यायां रामगेहे स्वर्गलोकात्समागतः ॥ २ ॥

अमुं मे संशयं छिंधि कृपां कृत्वा ममोपरि ।
सम्यक् पृष्टं विष्णुदास सावधानमनाः शृणु ॥ ३ ॥

एकदा राघवं द्रष्टुं दुर्वासा मुनिरभ्यगात् । शिष्यैः षष्टिसहस्रैश्च वेष्टितोऽचिंतयत्पथि ॥ ४ ॥
विष्णुर्मनुजरूपेण रामो जातोऽत्र वेद्म्यहम् । तथापि लोकान् रामस्य दर्शयिष्यामि पौरुषम् ॥ ५ ॥
एवं निश्चित्य साकेते मुनिः शिष्यैर्विवेश ह । विलंघ्य सोऽष्ट कक्षांस्तैः सीतागेहं ययौ मुनिः ॥ ६ ॥
सीतागेहे महद्‌द्वारसंस्थितं मुनिसत्तमम् । दुर्वाससं शिष्ययुक्तं दृष्ट्वा वै वेत्रपाणयः ॥ ७ ॥
शीघ्रं निवेदयामासुर्दास्या रामं रहः स्थितम् । रामोऽपि श्रुत्वा संप्राप्तं मुनिं प्रत्युज्जगाम सः ॥ ८ ॥
नत्वा तानानयामास सद्म ह्यासनमर्पयत् । एतस्मिन्नन्तरे रामं तिष्ठन्स मुनिसत्तमः ॥ ९ ॥
अब्रवीन्मधुरं वाक्यं शिष्यैः सर्वत्र वेष्टितः । अद्य वर्षसहस्राणामुपवासस्समापनम् ॥१०॥
अतो भोजनमिच्छामि मणिधेन्वनलैर्विना । सिद्धमन्नं मुहूर्तेन सशिष्याय समर्पय ॥११॥
मह्यं मनोऽभिलषितं नानापक्वान्नसंयुतम् । तथा मां पूजनार्थं हि शंभोः पुष्पाणि मानवैः ॥१२॥
अदृष्टान्यानयस्वाद्य गार्हस्थ्यं चेत्प्ररक्षसि । नोचेन्नाहं समर्थोऽस्मीत्युक्त्वा मां त्वं विसर्जय ॥१३॥
तन्मुनेर्वचनं श्रुत्वा विहस्य रघुनन्दनः । सर्वमंगीकृतं चेति विनयेनाब्रवीन्मुनिम् ॥१४॥
तद्रामवचनं श्रुत्वा तुष्टस्तं मुनिरब्रवीत् । स्नात्वा सरय्वां शीघ्रं त्वामागच्छामि त्वरां कुरु ॥१५॥
मदुक्तं सफलं कर्तुं सिद्धं बंधूंश्च जानकीं । तथेत्युक्त्वा मुनिं रामः स्नानार्थं च व्यसर्जयत् ॥१६॥
तदा ते लक्ष्मणाद्याश्च बंधवो जानकी तथा । कुशाद्या बालकाः सर्वे तेऽभूवन् भयविह्वलाः ॥१७॥

स्वर्णनिर्मित चौकीपर बैठे हुए भगवानका ध्यान करे ॥ १ ॥ सो सुनकर मुझे यह संदेह हो रहा है कि कल्पवृक्ष स्वर्गलोकसे रामचन्द्रजीके भवनमें कैसे आया । मुझपर कृपा करके आप इस संशयका निवारण कीजिये । श्रीरामदासजीने कहा—हे विष्णुदास ! तुमने बहुत अच्छी बात पूछी है । सावधान होकर सुनो ॥ २ ॥ ३ ॥ एक बार रामचन्द्रजीका दर्शन करनेके लिये साठ हजार शिष्योंसे परिवेष्टित दुर्वासा मुनि अयोध्याको जा रहे थे । रास्तेमें जाते-जाते दुर्वासाने सोचा कि स्वयं विष्णुभगवान् मनुष्यका रूप धारण करके संसारमें आये हैं, यह मैं जानता हूँ । फिर भी आज संसारके साधारण मनुष्योंको मैं उनका पौरुष दिखलाऊँगा ॥ ४ ॥ ५ ॥ ऐसा निश्चय करके वे अपने शिष्योंके साथ अयोध्या नगरीमें प्रविष्ट हुए और सबको साथ लिये हुए आठ चौक लाँघकर सीताके भवनमें जा पहुँचे ॥ ६ ॥ सीताजीके विशाल द्वारपर शिष्यों समेत आये हुए दुर्वासाको देखकर छड़ीदारोंने तुरन्त रामचन्द्रजीको खबर दी । यह समाचार सुनते ही भगवान् दुर्वासा मुनिके पास आ पहुँचे । उन्हें प्रणाम किया और सबको बड़े आदर समेत भवनके भीतर ले गये । वहाँ बैठनेके लिये उन्हें सुन्दर आसन दिया । आसनपर बैठे हुए दुर्वासाने बड़ी मधुर वाणीमें रामचन्द्रजीसे कहा—महाराज ! आज एक हजार वर्षका मेरा उपवासव्रत पूरा हुआ है । इस कारण मेरे शिष्योंके साथ मुझे भोजन चाहिए । इसके लिये आपको केवल एक मुहूर्तका समय मिलेगा और वह भोजन मणि, कामधेनु तथा अग्निकी सहायतासे न तैयार किया जाय । बस, एक मुहूर्तमें मुझे मेरी इच्छाके अनुकूल भोजन मिले ! जिसमें विविध प्रकारके पकवान सम्मिलित रहें । यदि तुम अपना गार्हस्थ्य रखे रहना चाहते होओ तो शिवजीकी पूजाके निमित्त मुझे ऐसे फूल मँगवा दो, जिन्हें अबतक किसीने न देखा हो । यदि ऐसा न कर सकते हो तो साफ-साफ कह दो कि मैं ऐसा करनेमें असमर्थ हूँ । यह कहकर मुझे बिदा कर दो ॥ ७–१३ ॥ मुनिकी बातोंको सुनकर मुसकाते हुए राम नम्रतापूर्वक बोले–"मुझे सब कुछ अंगीकार है" ॥ १४ ॥ रामकी बातसे प्रसन्न होकर दुर्वासाने कहा कि मैं शीघ्र सरयूमें स्नान करके आता हूँ ॥ १५ ॥ हमारे कथनानुसार सब चीजोंकी तैयारीके लिए अपने भ्राताओं तथा सीताको भी शीघ्रता के लिए कह देना । 'अच्छा' कहकर रामचन्द्रजीने दुर्वासाको स्नान करनेके लिये

ऊचुः परस्परं सर्वे रामन्यस्तेक्षणाः शनैः । किं याचितं हि मुनिना किं रामोऽग्रे करिष्यति ॥१८॥
विना गोवह्निमणिभिः कथमन्नं प्रदास्यति । ततो गते मुनौ रामः पत्रं सौमित्रिणा तदा ॥१९॥
विलेख्य बद्ध्वा बाणे तन्मुमोच शरमुत्तमम् । स शरो वायुवेगेन शीघ्रं गत्वाऽमरावतीम् ॥२०॥
सुधर्मायां सुरैर्युक्तस्येंद्रस्याग्रे पपात ह । तं शरं मघवा दृष्ट्वा चकितो भयविह्वलः ॥२१॥
कस्यायमिति चोक्त्वा तद्रामनाम व्यलोकयत् । सुवर्णरचितं बाणपुच्छस्थं पापदाहकम् ॥२२॥
ततो ज्ञात्वा राघवस्य शरोऽयमिति देवराट् । तस्मिन्बन्धं विमुच्यासौ पत्रं नत्वा पपाठ च ॥२३॥
एतस्मिन्नंतरे बाणः पुनः श्रीराघवं ययौ । विवेश रामतूणीरे पूर्ववत्संस्थितोऽभवत् ॥२४॥
मघवाऽपि सुधर्मायां श्रावयामास निर्जरान् । राममुद्रांकितं पत्रं भयविस्मयसंयुतः ॥२५॥
मघवंस्त्वं सुखं तिष्ठ स्वर्गेऽहं त्वां सदा स्मरे । मन्नियोगं शृणुष्वाद्य याचितोऽस्म्यधुना त्वहम् ॥२६॥
विना गोवह्निमणिभिश्चान्नं शिष्यैर्युतेन च । वरैः षष्टिसहस्रैश्च तथाऽन्यैर्मुनिसत्तमैः ॥२७॥
सहस्राब्दक्षुधितेन क्रोधिनाऽतितपस्विना । दुर्वाससा मुहूर्तात्तु मयाऽप्यंगीकृतं हि तत् ॥२८॥
याचितान्यपि पुष्पाणि तेनादृष्टानि मानवैः । मयांगीकृत्य सकलं स्नानार्थं ते विसर्जिताः ॥२९॥
अतः शीघ्रं कल्पवृक्षपारिजातौ समुद्रजौ । प्रेषयस्व क्षणान्मां त्वमविलम्बेन सादरात् ॥३०॥
मा रावणशिरश्छेत्तुः प्रतीक्षां त्वामिषोः कुरु । एवं संश्राव्य तत्पत्रं सुरानिंद्रः सुरैः सह ॥३१॥
संमंत्र्याथ कल्पवृक्षपारिजातौ विगृह्य सः । विमानेन सुरैर्युक्तः श्रीरामनगरीं ययौ ॥३२॥
इन्द्रमागतमाज्ञाय तं प्रत्युद्गम्य लक्ष्मणः । अयोध्यायां निनायेन्द्रं सभास्थं रघुनन्दनम् ॥३३॥
कल्पवृक्षपारिजातौ मघवा रघुनन्दनम् । समर्प्य नत्वा श्रीरामं स उपाविशदासने ॥३४॥
एतस्मिन्नन्तरे शिष्यं दुर्वासा मुनिरब्रवीत् । गत्वा त्वं पश्य रामं तु किं करोत्यधुना गृहे ॥३५॥

---

भेज दिया ॥ १६ ॥ इधर लक्ष्मणादिक भ्राता, जानकी और कुश आदि बालक सबके सब भयसे विह्वल हो गये और वे रामकी ओर निर्निमेष दृष्टिसे देखते हुए अपने मनमें कहने लगे कि मुनिने बड़ी अद्भुत वस्तुएँ माँगी हैं। देखें, राम अब क्या करते हैं। बिना गौ, मणि तथा अग्निके किस प्रकार भोजन तैयार करके देते हैं ॥१७॥१८॥ मुनिके चले जानेपर रामचन्द्रजीने लक्ष्मणसे एक पत्र लिखवाया। उसे अपने बाणमें बाँधकर धनुषपर चढ़ाया और छोड़ दिया। वह बाण वायुके समान वेगसे अमरावतीपुरीमें जाकर सुधर्मा नामकी देवसभामें इन्द्रके सामने गिरा। उस बाणको इन्द्रने देखा तो भयभीत होकर कहा—॥ १९-२१ ॥ "यह बाण किसका है !" यह कहकर उसपर लिखे रामके नामको देखा और पत्र खोलकर पढ़ा। पत्र ले जानेवाला बाण वहाँसे फिर रामजीके तूणीरमें लौट आया ॥ २२-२४ ॥ भय और विस्मय युक्त इन्द्रने वह पत्र सभामें बैठे हुए देवताओंको सुनाया ॥ २५ ॥ उस पत्रपर लिखा था—"हे इन्द्र ! तुम स्वर्गमें सुखी रहो। मैं सदा तुम्हारा स्मरण किया करता हूँ। हाँ, इस समय तुम्हें मैं एक आज्ञा दे रहा हूँ। आज एक हजार वर्षके भूखे एवं उग्र क्रोधी दुर्वासा मुनि अपने साठ हजार अच्छे शिष्योंके साथ मेरे यहाँ आये हुए हैं। वे ऐसा भोजन चाहते हैं कि जो गौ, मणि अथवा अग्निके द्वारा न बना हो। साथ ही उन्होंने शिवपूजनके लिए ऐसे फूल माँगे हैं, जिन्हें अबतक मनुष्योंने न देखा हो। मैंने उनकी माँगें स्वीकार कर ली हैं। इस समय मैंने उन्हें स्नान करनेको भेज दिया है ॥ २६-२९ ॥ इससे तुम झटपट कल्पवृक्ष और पारिजात, जो कि क्षीरसागरसे निकले हैं, क्षणभरमें आदरपूर्वक मेरे पास भेज दो ॥ ३० ॥ देखो, कहीं रावणका विनाश करनेवाले मेरे बाणकी प्रतीक्षा न करने लगना।" इस प्रकार वह पत्र देवताओंको सुनाकर इन्द्रदेव तुरन्त सबके साथ मंत्रणा करके कल्पवृक्ष और पारिजात ले तथा देवताओं समेत विमानपर चढ़कर अयोध्यापुरीमें जा पहुँचे ॥ ३१ ॥ ॥ ३२ ॥ लक्ष्मणने जब यह जाना कि देवराज इन्द्र आ गये हैं तो उनके पास गये और आदरपूर्वक अयोध्यामें रामके पास ले आये ॥ ३३ ॥ इन्द्रने पारिजात तथा कल्पवृक्ष रामको अर्पण करके प्रणाम किया। फिर एक

अस्माकं कल्पितं किंचिदन्नमस्त्यथवा न वा ।
चिंतायुक्तोऽस्ति वा तूष्णीं संस्थितोऽस्त्यत्र किं कृतम् ॥३६॥
बहिः संपादितं सर्वं मया यद्यच्च याचितम् । रहः स्थितः शनैर्दृष्ट्वा शीघ्रं त्वं याहि मां पुनः ॥३७॥
तथेत्युक्त्वा मुनिं शिष्यः स ययौ रामसद्गृहम्। तत्र दृष्ट्वा कल्पवृक्षपारिजातौ सनिर्जरौ ॥३८॥
सनिर्जरेशं रामं च मुदितं सीतयाऽन्वितम् । ततस्तूर्णं ययौ शिष्यः परावृत्य मुनिं प्रति ॥३९॥
कथयामास सकलं यथावृत्तं निरीक्षितम् । तच्छ्रुत्वा शिष्यवचनं दुर्वासा विस्मयान्वितः ॥४०॥
ययौ शिष्यैः परिवृतो विवेश नृपतेर्गृहम् । तं मुनिं राघवो दृष्ट्वा प्रत्युद्गम्य पुनः सुरैः ॥४१॥
नमस्कृत्य मुहुर्वेगाद्ददावासनमुत्तमम् । ततो मुनेः पूजनं स सशिष्यस्य रघूत्तमः ॥४२॥
चकार सीतया सार्द्धं लक्ष्मणादिभिरन्वितः । पारिजातप्रसूनानि नेक्षितान्यत्र मानवैः ॥४३॥
ददौ शंभोः पूजनार्थं रामो दुर्वाससे तदा । तानि दृष्ट्वा मुनिस्तूर्ष्णीं तैश्चकारेश्वरार्चनम् ॥४४॥
ततः सर्वान्सुरान्पूज्य परिवेषणकर्मणि । चोदयामास श्रीरामो जानकीं लक्ष्मणेन सः ॥४५॥
ततः सा जानकी वेगाद्दिव्यालंकारमण्डिता । कल्पवृक्षपारिजातौ सम्पूज्य नूपुरस्वना ॥४६॥
पात्राणि कल्पवृक्षाधः स्थापयामास कोटिशः । सीता तं प्रार्थयामास कल्पवृक्षं नगोत्तमम् ॥४७॥
क्षीरसागरसंभूत देवानां चिंतितप्रद । दुर्वाससे कल्पवृक्ष सशिष्यायाद्य तोषय ॥४८॥
तत्सीतावचनं श्रुत्वा हेमपात्राणि कोटिशः । चित्रान्नैः पूरयामास क्षणात्कल्पतरुस्तदा ॥४९॥
तैरन्नैर्हैमपात्रेषु जानकी परिवेषणम् । क्षणाच्चकार सतुष्टा ह्युर्मिलाचंपिकादिभिः ॥५०॥
ततस्तुष्टो मुनिर्देवः शिष्यैरशनमादरात् । चकार रघुवीरेण प्रार्थितः स मुहुर्मुहुः ॥५१॥
ततः कृत्वा भोजनं हि करशुद्धिं विधाय सः । तांबूलं दक्षिणां चापि जग्राह रघुनायकात् ॥५२॥

---

आसनपर जा बैठे ॥ ३४ ॥ उधर सरयूके किनारेसे दुर्वासाने अपना एक शिष्य भेजा और उससे कहा–"तुम जाकर देखो कि राम इस समय क्या कर रहे हैं ॥ ३५ ॥ मैंने जो-जो बतलाया था, उसमें कुछ अन्न तैयार है या नहीं । अथवा अभी तक चिन्ता करते हुए यूँ ही चुपचाप बैठे हैं ॥ ३६ ॥ यदि मेरे आज्ञानुसार काम कर रहे हैं तो अबतक क्या-क्या किया है । मैंने जैसा कहा था, वे सब चीजें उन्होंने इकट्ठी कर लीं या नहीं । कहीं छिपकर चुपचाप यह सब देखो और शीघ्र मेरे पास लौट आओ" ॥ ३७ ॥ "अच्छा" कहकर शिष्य रामचन्द्रजीके भवनमें जा पहुँचा । वहाँ कल्पवृक्ष, पारिजात, इन्द्र, देवताओंकी मण्डली एवं प्रसन्न राम तथा सीताको देखकर फिर दुर्वासा मुनिके पास लौट गया और जैसा देखा था, सब समाचार कह सुनाया । शिष्यकी बात सुनकर दुर्वासाको बड़ा आश्चर्य हुआ ॥ ३८–४० ॥ स्नानके बाद शिष्योंको साथ लेकर वे रामचन्द्रजीके सुन्दर भवनमें पहुँचे । मुनि दुर्वासाको देख देवताओंके साथ उठकर रामचन्द्रजीने बड़े आदरके साथ समस्त शिष्यों समेत मुनिको प्रणाम किया और बैठनेके लिये उत्तम आसन देकर सीता तथा लक्ष्मणादिके साथ उनकी पूजा की । मनुष्योंने पारिजातके फूल नहीं देखे थे ॥ ४१–४३ ॥ सो उन फूलोंको शिवपूजनके निमित्त मुनिके सामने रक्खा । दुर्वासाने उन्हें एक बार विस्मित नेत्रोंसे देखा और चुपचाप शिव तथा सब देवताओंका पूजन किया ॥ ४४ ॥ इसके अनन्तर रामचन्द्रजीने लक्ष्मण और जानकीको भोजन परोसनेकी आज्ञा दी ॥ ४५ ॥ तब दिव्यालङ्कारोंको धारण किये सीताने कल्पवृक्ष और पारिजातका पूजन करके करोड़ों बर्तन लाकर उनके नीचे रख दिया और इस प्रकार प्रार्थना करने लगीं–॥ ४६-४७ ॥ "हे क्षीरसागरसे जायमान तथा देवताओंकी अभिलाषा पूर्ण करनेवाले कल्पवृक्ष ! आज शिष्यों समेत दुर्वासाको आप सन्तुष्ट कर दीजिए" ॥४८। सीताकी प्रार्थना सुनकर क्षणभरमें कल्पवृक्षने करोड़ों पात्रोंको विविध प्रकारकी भोजनसामग्रियोंसे भर दिया । उन अन्नोंको उर्मिलादिके साथ सीताने सुवर्णके पात्रोंमें परोसा और महर्षि दुर्वासाने प्रसन्न होकर अपने समस्त शिष्योंके साथ रामचन्द्रजीके द्वारा प्रार्थित होनेपर भोजन करना आरम्भ किया ॥ ४९–५१ ॥ भोजन करनेके बाद उन्होंने

ततः सुराणां पुरतो वेदवाक्यैः सविस्तरम् । दुर्वासा राघवं स्तुत्वा तमाहानंदनिर्भरः ॥५३॥
राम राजीवपत्राक्ष त्वं साक्षाज्जगदीश्वरः । अत्र रावणघातार्थमवतीर्णोऽसि वेद्म्यहम् ॥५४॥
जनांस्त्वत्पौरुषं ज्ञातुं मयैतद्याचितं तव । विना गोवह्निमणिभिर्दिव्यान्नं रघुनन्दन ॥५५॥
प्रसूनान्यप्यदृष्टानि मानवैर्जगतीतले । किं राम दुर्घटं तत्र यस्य भ्रूभङ्गमात्रतः ॥५६॥
लयो ब्रह्मादिकानां च जायते संभवोऽपि च । मन्दरं मज्जमानं तु दृष्ट्वा त्वं क्षीरसागरे ॥५७॥
कूर्मरूपेण जातोऽसि धर्तुं तु मन्दराचलम् । निष्कासितानि रत्नानि तदा देवैश्चतुर्दश ॥५८॥
तव साहाय्यमात्रेण सर्वं जानाम्यहं प्रभो । लक्ष्मीः सोमः कामधेनुः कौस्तुभश्च सुधा विषम् ॥५९॥
ऐरावतश्चाप्सरसः कल्पवृक्षो भिषग्वरः । उच्चैःश्रवाः पारिजातो सुरा ज्येष्ठेति राघवः ॥६०॥
चतुर्दश सुरत्नानि विभक्तानि पुरा त्वया । देवेभ्यो यानि तान्येते भोक्ष्यंति कृपया तव ॥६१॥
त्वदाज्ञापालिनः सर्वे शङ्कराद्याश्च निर्जराः । सर्वेषां जीवनोपायास्त्वया सर्वे पृथक् पृथक् ॥६२॥
कल्पिता येन रामेण तत्र किं दुर्घटं तव । ममाभिलषितं भोज्यं दातुं त्वत्कौतुकं मया ॥६३॥
अद्यावलोकितं राम जनानपि प्रदर्शितम् । त्वं पाता सर्वलोकानां जनकश्चापि घातकृत् ॥६४॥
अस्माकं गतिदाता त्वं मे क्षमस्वापराधितम् । एवं नानाविधं स्तुत्वा तं प्रणम्य पुनः पुनः ॥६५॥
राममामंत्र्य दुर्वासा ययौ शिष्यैः स्वमाश्रमम्। अथ तान्निर्जरान्प्राह रामः कनकलोचनः ॥६६॥
कल्पवृक्षपारिजातौ गृहीत्वा गम्यतां दिवम् । तद्रामवचनं श्रुत्वा वाक्पतिः प्राह राघवम् ॥६७॥
यावत्कालं तिष्ठसि त्वं भूम्यां तावन्नगोत्तमौ । अयोध्यायां तिष्ठतस्तौ कल्पवृक्षसुरद्रुमौ ॥६८॥
त्वयि वैकुण्ठमायाते दिवं तौ यास्यतो भुवः । तथेति तत्सुरगुरोः प्रतिनंद्य वचः प्रभुः ॥६९॥

हाथ धोया और रामसे ताम्बूल-दक्षिणा ली ॥ ५२ ॥ फिर उन देवताओंके सामने ही वेदवाक्यों द्वारा विस्तारपूर्वक रामचन्द्रजीकी स्तुति की और आनन्दसे गद्गद होकर कहने लगे—॥ ५३ ॥ हे राम ! हे कमलदल सरीखे नेत्रोंवाले भगवन् ! मैं जानता हूँ कि तुम साक्षात् जगदीश्वर हो और रावणका विनाश करनेके लिए इस धरातलपर आये हो ॥ ५४ ॥ संसारी जनोंको तुम्हारा पौरुष दिखलानेके लिए ही मैंने गो-वह्नि और मणिसे न सिद्ध हुआ अन्न तथा मनुष्योंसे अदृष्ट फूल पूजनेके निमित्त माँगे थे। हे राम ! तुम्हारे लिए यह कुछ दुर्घट कार्य नहीं है ; तुम्हारे भ्रूभंगमात्रसे ब्रह्मादिक देवताओंका भी विनाश एवं उद्भव होता है। जिस समय मंदराचलको क्षीरसागरमें तुमने डूबते देखा ॥ ५५ ॥ ५६ ॥ तब कूर्मरूप धरकर उसे अपनी पीठपर उठा लिया था। उस समय एकमात्र तुम्हारी सहायतासे ही देवताओंने क्षीरसागरसे ये चौदह रत्न निकाले थे ॥ ५७ ॥ ५८ ॥ जिनके नाम हैं—लक्ष्मी, चन्द्रमा, कामधेनु, कौस्तुभ, सुधा, विष, ऐरावत, अप्सराएँ, कल्पवृक्ष, धन्वन्तरी, उच्चैःश्रवा, पारिजात, सुरा और अमृत ॥ ५९ ॥ ६० ॥ उन चौदहों रत्नोंको तुमने चौदह देवताओंको बाँट दिया और तुम्हारी ही कृपासे वे सब आनन्दपूर्वक उनका उपभोग कर रहे हैं ॥ ६१ ॥ शंकरादिक समस्त देवता तुम्हारी ही आज्ञाका पालन करते हैं। इस जगत्में स्थित सब प्राणियोंके जीवनका उपाय तुम्हीं करते हो ॥ ६२ ॥ तब यदि तुमने हमारे इच्छानुसार भोजनकी सामग्रियें जुटा दीं तो इसमें कोई आश्चर्यकी बात नहीं है। यह तो मुझे इन साधारण श्रेणीके मनुष्योंको तुम्हारा कौतुक दिखाना था, सो दिखा दिया ॥ ६३ ॥ हे राम ! तुम्हीं समस्त लोकोंके रक्षक, स्रष्टा तथा संसारके नाशक हो ॥ ६४ ॥ तुम्हीं हमारे गतिदाता हो। मुझसे जो कुछ त्रुटि हुई हो, सो क्षमा कर दो। इस तरह नाना प्रकारके वाक्यों द्वारा स्तुति करके दुर्वासाने वारम्वार प्रणाम किया और रामचन्द्रजीकी आज्ञा लेकर सब शिष्योंको साथ लिये हुए अपने आश्रमको चल दिये । इसके अनन्तर रामचन्द्रजीने उन देवताओंसे कहा—कल्पवृक्ष और पारिजातको लेकर अब आप लोग भी अपने लोकको जाते जायँ। इस प्रकार रामकी बात सुनकर देवगुरु बृहस्पति कहने लगे—॥ ६५–६७ ॥ "जबतक आप भूमण्डलमें रहेंगे, तबतक कल्पवृक्ष तथा पारिजात ये दोनों भी इस अयोध्यामें ही रहेंगे ॥ ६८ ॥ जब आप अपने वैकुण्ठ लोकको जाने लगेंगे, तब ये भी आपके साथ चले

पुष्पके स्थापयामास कल्पवृक्षसुरद्रुमौ । ततस्ते राघवं नत्वा ययुरिंद्रादिकाः सुराः ॥७०॥
स्वर्गलोकं सुसंतुष्टा राघवेणातिपूजिताः । एवं प्राप्तौ कल्पवृक्षपारिजातौ भुवं दिवः ॥७१॥
तयोरेतत्कारणं ते प्रोक्तं पृष्टं यथा त्वया । तदारभ्य सुरतरू पुष्पकस्थौ विरेजतुः ॥७२॥
साकेते सीतया रामस्ताभ्यां सुखमवाप सः । कल्पवृक्षतले दिव्यपर्यङ्के सीतया सह ॥७३॥
नानाभोगान्राघवेन्द्रः स बुभोज चिरं सुखम् । अतः पूर्वं मया रामध्यानं कल्पतरोः स्थले ॥७४॥
सहस्रनामसंकेते प्रोक्तं शिष्य तवाग्रतः । तदारभ्य पारिजातवृक्षांशाः शतशो भुवि ॥७५॥
पारिजातनगा जाता वर्तन्तेऽद्यापि तेऽत्र हि । नानेन सदृशं पुष्पं वर्तते रामतोषदम् ॥७६॥
कल्पवृक्षांशरूपाश्च ज्ञातव्यास्तत्र -मानवैः । अश्वत्थाः सेवनाद्यैश्च सर्ववांछितदायकाः ॥७७॥
पुण्याधिक्येन सेवन्ते नोपेक्षंते युगत्रये । पापाधिक्येनापि सेवां नरा वांछति नो कलौ ॥७८॥

इति श्रीशतकोटिरामचरितांतर्गते श्रीमदानन्दरामायणे वाल्मीकीये विवाहकाण्डे
चम्पिकास्वयंवरो नाम द्वितीयः सर्गः ॥ २ ॥

---

## तृतीयः सर्गः

### ( रामोपासक तथा कृष्णोपासकका परस्पर मधुर विवाद )

विष्णुदास उवाच

रामदास गुरो भूम्यां रामकृष्णौ वरौ श्रुतौ । मया दशावतारेषु ह्यवतारावुभौ पुरा ॥ १ ॥
तयोरपि च कः श्रेष्ठस्तत्त्वं वद ममाग्रतः । यं श्रुत्वा सर्वदा तस्य श्रोष्येऽहं चरितं शुभम् ॥ २ ॥

श्रीरामदास उवाच

सम्यक् पृष्टं विष्णुदास सावधानमनाः शृणु । रामावतारः श्रेष्ठोऽत्र विज्ञेयः सर्वदा नरैः ॥ ३ ॥
अस्मिन्नर्थे पूर्ववृत्तां कथां शृणु मनोहराम् । द्विजाभ्यां वादरूपेण कीर्तितां पुण्यदायिकाम् ॥ ४ ॥

---

जायेंगे। रामने सुरगुरु बृहस्पतिकी बात स्वीकार कर ली ॥ ६९ ॥ देवताओंने उन दोनोंको पुष्पक विमानमें रखकर भगवान्‌को प्रणाम किया और राम द्वारा पूजित होकर सब अपने अपने लोकको चल गये ॥ ७० ॥ इस प्रकार कल्पवृक्ष और पारिजात स्वर्गसे मृत्युलोकमें आये। उनके आनेका जो कारण था, वह तुम्हारे प्रश्नानुसार मैंने कह सुनाया। तभीसे दोनों सुरतरु पुष्पकमें विराजमान रहे ॥ ७१ ॥ ७२ ॥ अयोध्यामें सीताके साथ रामचन्द्रजी उन्हीं वृक्षोंके नीचे दिव्य पर्यङ्कके ऊपर विहार करते हुए विविध प्रकारके सुखोंको भोगते थे ॥ ७३ ॥ ७४ ॥ इसीलिए मैंने रामसहस्रनामका कथन करते समय कल्पवृक्षके नीचे रामका ध्यान करनेको कहा था। तभीसे पारिजातके सैकड़ों अंश पृथ्वीतलमें उत्पन्न हुए और वे आज भी इस धरतीतलमें विद्यमान हैं। इसके समान रामचन्द्रजीको प्रसन्न करनेवाला कोई दूसरा फूल नहीं है ॥ ७५ ॥ ७६ ॥ कल्पवृक्षके अंशसे पीपल वृक्षकी भी उत्पत्ति हुई है। उसकी आराधना करनेसे सब प्रकारकी कामना पूर्ण होती है ॥ ७७ ॥ अन्य युगोंमें पुण्य अधिक था। इस कारण लोग पीपलके वृक्षकी आराधना करते थे। किन्तु कलियुगमें पापकी अधिकता होनेके कारण लोग उसका पूजन नहीं करना चाहते ॥ ७८ ॥ इति श्रीशतकोटिरामचरितान्तर्गते श्रीमदानन्दरामायणे पं० रामतेजपाण्डेयविरचित'ज्योत्स्ना'भाषाटीकासमन्विते राज्यकांडे पूर्वार्द्धे द्वितीयः सर्गः ॥ २ ॥

विष्णुदासने कहा--हे गुरो! भगवान्‌के दस अवतारोंमें राम-कृष्ण दो अवतार श्रेष्ठ माने जाते हैं। यह मैंने पहले कई बार सुना है ॥ १ ॥ अब आप हमको यह बतलाइए कि इन दोनों अर्थात् राम और कृष्णमें कौन बड़ा है। जिसको आप श्रेष्ठ बतलायेंगे, मैं सर्वदा उसीका चरित्र सुना करूँगा ॥ २ ॥ श्रीरामदासने कहा—हे विष्णुदास! तुमने ठीक प्रश्न किया है। सावधान मन होकर सुनो। इन दोनों अवतारोंमें मनुष्यको रामका अवतार ही श्रेष्ठ समझना चाहिए ॥ ३ ॥ इसके लिए एक मनोहर कथा आपसमें दो ब्राह्मणोंके

अयोध्याविषये कश्चिद्द्विजो रामाह्वयस्त्वभूत् । द्वारकायां तथा विप्रः कृष्णाख्योऽभूत्परः सुधीः ॥५॥
चक्रतुः सेवनं चोभौ सर्वदा रामकृष्णयोः । तावेकदा माघमासे प्रयागे मिलितौ द्विजौ ॥ ६ ॥
उभौ स्नात्वा त्रिवेण्यां हि माधवं परिपूज्य च । कथां पौराणिकमुखाच्छ्रोतुं तत्पुरतः स्थितौ ॥ ७ ॥
शुश्रुवतुः कथास्तत्र प्रसंगाद्राघवस्य च । रामाख्यो रामभक्तः स श्रुत्वा राघवसत्कथाम् ॥ ८ ॥
तुष्टस्तं पूजयामास मुदा पौराणिकं तदा । कृष्णाख्यः क्रोधसंयुक्तस्तदा वचनमब्रवीत् ॥ ९ ॥
किं क्लेशिनोऽद्य रामस्य कथां श्रुत्वाऽतिहर्षितः ।
पूजितोऽपि वृथा व्यासस्त्वं मूढोऽसीति वेद्म्यहम् ॥१०॥
नान्यच्चरित्रं कस्यापि पावनं श्रुतितोषदम् । यथा कृष्णस्य मे रम्यं नानाक्रीडापुरःसरम् ॥११॥
तत्कृष्णवचनं श्रुत्वा रामाख्यः प्राह सस्मितः ।

रामोपासक उवाच

रामः क्लेशी कथं प्रोक्तस्त्वया कृष्णः कथं सुखी ॥१२॥
कथं कृष्णस्य ते रम्यं चरितं दुरितापहम् । कथं रामस्य मे रम्यं चरितं नेरितं त्वया ॥१३॥
वदाद्य विस्तरेणैव शृण्वन्त्वेते सभासदः ।

कृष्णोपासक उवाच

सम्यक् पृष्टं त्वया राम सावधानमनाः शृणु ॥१४॥
वदामि राघवस्याथ कृष्णस्य चरितं त्वहम् । क्लेशदं तोषदं नृणां शृण्वन्त्वेते सभासदः ॥१५॥
तव रामस्य जन्मादौ जातः शापः पितुः पुरा । शापस्यादावपि पुरा तद्धेतो रावणेन हि ॥१६।
लंकां तत्पितरौ नीतौ प्रारंभे दुःखमीदृशम् । मम कृष्णस्य जन्मादौ तत्पित्रोः सौख्यदायकैः ॥१७॥
विवाहमंगलैः कंसः पूजयामास सादरम् ।

---

विवादरूपमें कही गयी थी । वह कथा परम पुण्यदायिनी है, उसे सुनो ॥ ४ ॥ एक समय अयोध्यामें राम नामका एक ब्राह्मण रहा करता था। उसी तरह द्वारकापुरीमें कृष्ण नामका विद्वान् विप्र रहता था ॥ ५ ॥ वे दोनों सदा राम और कृष्णकी उपासना किया करते थे। एक समय माघ महीनेमें त्रिवेणीके तटपर उन दोनोंकी भेंट हुई ॥ ६ ॥ उन्होंने त्रिवेणीमें स्नान किया और वेणीमाधवकी पूजा करके किसी करके एक पौराणिकके पास कथा सुननेकी इच्छासे जा बैठे ॥ ७ ॥ दोनों कथा सुन रहे थे। उसमें कहीं रामका प्रसंग आ गया। उसे सुनकर वह राम नामवाला ब्राह्मण बहुत प्रसन्न हुआ और हर्षपूर्वक पौराणिककी भली भाँति पूजा की। इससे कृष्ण नामवाला ब्राह्मण मारे क्रोधके लाल हो गया और कहने लगा—जगत्को कष्ट देनेवाले रामकी कथा सुननेसे तुम्हें क्या लाभ हुआ, जो तुम इतने प्रसन्न हो और तुमने व्यासकी ऐसी पूजा की। मेरी समझमें तो यही आता है कि तुम बड़े मूर्ख हो ॥ ८-१० ॥ मुझे तो और किसीका चरित्र इतना सुन्दर नहीं लगाता, जितना श्रीकृष्णका। क्योंकि उस चरित्रमें विविध प्रकारकी लीलाएँ भरी हुई हैं ॥ ११ ॥ कृष्ण नामक ब्राह्मणकी यह बात सुनकर रामोपासक मुसकाता हुआ कहने लगा कि तुमने रामचन्द्रको कैसे दुःखी बतलाया और कृष्णको सुखी ॥ १२ ॥ तुमने कृष्णचरित्रको कैसे पापनाशक बतलाया और रामचन्द्रजीका नाम लेना भी पसन्द नहीं किया। तुम इसे विस्तारपूर्वक कहो। जिससे ये सभासद भी सुनें। कृष्णोपासकने कहा—हे राम! तुमने बहुत ठीक प्रश्न किया है। अब सावधान होकर सुनो ॥ १३ ॥ १४ ॥ मैं रामचन्द्र तथा कृष्णचन्द्र इन दोनोंका चरित्र सुनाता हूँ। उनमें रामचरित्र कैसा क्लेशप्रद और कृष्णचरित्र कितना सुखकर है, सो सब सभासद सुनते जायँ ॥ १५ ॥ तुम्हारे रामके जन्मके पहले ही उनके पिताको श्रवणके पिताका शाप मिल चुका था। उसके भी पहले उनके माता-पिताको रावण अपनी लंकामें उठा ले गया था। इस प्रकार रामके जन्मके पहले उनके माता-पिताको

रामोपासक उवाच

रे रे शृणु त्वं दुर्बुद्धे न स शापो वरोऽर्पितः ॥१८॥

यत्प्रसादादपुत्रस्य नृपस्य तनयस्त्वभूत् । तथा मद्राममीत्या तौ नीतावपि विसर्जितौ ॥१९॥
दशास्येन तत्पितरौ जन्मादौ पौरुषं त्विदम् । तव कृष्णस्य जन्मादौ पित्रोः कारागृहस्थितिः ॥२०॥
राजभोगनिषेधार्थं शापो यदुकुलाय च । जन्मापि बन्दिशालायां वियोगश्च तयोरपि ॥२१॥
सहोदरवधश्चापि तद्धेतोर्मातुलेन हि । न बाहुजश्च वैश्यश्च यस्य तातावुभौ स्मृतौ ॥२२॥
गोरक्षकस्य तनयः प्रवासः शैशवेऽपि च ।
परेण पोषितश्चापि कनीयान् बलभद्रतः । एवं नानाविधं दुःखं तव कृष्णस्य नो सुखम् ॥२३॥

कृष्णोपासक उवाच

आत्मार्थं तव रामेण ताटिका स्त्री विदारिता । नार्थं विमोचितो बाणः पित्रोः खेदो वियोगतः ॥२४॥

रामोपासक उवाच

द्विजघ्ना निहता दुष्टा मम रामेण ताटिका । मुनियज्ञरक्षणार्थं मुदा राज्ञाऽर्पितौ शिशू ॥२५॥
तव कृष्णेन रक्षार्थमात्मनः पूतना हता । तथाऽऽत्मार्थं प्राणिहिंसा बहु तेन कृता व्रजे ॥२६॥
गोपैश्च सङ्गतिस्तस्य तथैव गोपरक्षणम् । गोवधः सर्पघातश्च खगवाजिवधस्तथा ॥२७॥
रासभवृषघातश्च चौर्यं द्यूतं वनेऽटनम् । कंबलावरणं शीतपर्जन्योष्णप्रपीडनम् ॥२८॥
क्षुत्तृड्भ्यां पीडनं नित्यं गोपालोच्छिष्टसेवनम् । आत्मार्थं याचितं चान्नं द्विजस्त्रीभ्यो वने मुहुः ॥२९॥
इन्द्रध्वजपूजनादिवृद्धाचारप्रलोपनम् । परस्त्रीगमनं ज्येष्ठनारीभिः क्रीडनं चिरम् ॥३०॥

---

कितना क्लेश हुआ । इसके विपरीत हमारे कृष्णके जन्मके पहले कंसने उनके माता-पिताको वैवाहिक तथा मङ्गलमयी सामग्रियोंसे पूजा की थी । रामोपासकने कहा—अरे दुर्बुद्धे ! वह रामचन्द्रके पिताको शाप नहीं, बल्कि वरदान मिला था । जिसके प्रसादस्वरूप निपूते महाराज दशरथके घरमें रामचन्द्रादि चारों भाइयोंका जन्म हुआ और हमारे रामचन्द्रजीके डरसे ही रावण उनके माता-पिताको ले जाकर भी अयोध्यामें लौटा गया था ॥ १६–१९ ॥ जन्मके पहले ही मेरे रामचन्द्रजीमें इतना पौरुष था । तुम्हारे कृष्णके जन्मके प्रथम ही उनके माता-पिता कारागारमें बन्द थे । दूसरे यदुकुलको राजभोगनिषेधके निमित्त पहले ही शाप प्राप्त हो चुका था । उनका जन्म भी हुआ तो जेलखानेमें और वहाँ थोड़ी ही देरमें माता-पितासे वियोग हो गया । कृष्णके कितने ही सगे भाई मामाके द्वारा पहले ही मार डाले गये । उनको जो कृत्रिम माता-पिता मिले भी, वे न तो क्षत्रिय थे और न वैश्य ॥ २०–२२ ॥ तुम्हारे कृष्ण एक ग्वालेके लड़के बने । इस प्रकार वे शैशवावस्थामें ही प्रवासी हो गये । औरोंने उनकी रक्षा की और तुम्हारे कृष्ण बलरामसे छोटे थे । इसीलिए कृष्णको अनेक प्रकारका दुःख मिला, सुख कुछ भी नहीं ॥ २३ ॥ कृष्णोपासक बोला—अपनी रक्षा करनेके लिए तुम्हारे रामने ताड़का नामवाली एक स्त्रीका वध किया और रामके वियोगसे उनके माता-पिताको महान् क्लेश हुआ ॥२४॥ रामोपासकने कहा—हमारे रामने ब्राह्मणोंकी हत्या करनेवाली स्त्री ताड़काको मारा था और विश्वामित्रकी यज्ञरक्षाके लिए उन्हें पिता दशरथने प्रसन्नतापूर्वक मुनिके साथ भेजा था ॥२५॥ किन्तु तुम्हारे कृष्णने अपने लिए पूतनाको मारा था । इसी प्रकार उन्होंने आत्मरक्षाके लिए व्रजमें और भी बहुत-सी प्राणिहिंसाएँ की थीं ॥२६॥ गोप-ग्वालोंका साथ था और वे गोपोंकी ही रक्षा करते थे । उन्होंने गौ ( धेनुकासुर ), पक्षी ( बकासुर ), वाजि ( केशी ), रासभ तथा वृष आदिको मारा, चोरी की, जुआ खेले और वनोंमें इधर-उधर घूमते रहे । शीत, वर्षा तथा आतपसे बचनेके लिए अपने ऊपर केवल एक कम्बल डाले रहते थे ॥ २६–२८ ॥ भूख-प्याससे दुःखी होकर ग्वालोंका जूठन खाते थे । अपने लिए उन्होंने वनमें ब्राह्मणोंकी स्त्रियोंसे बार-बार अन्न माँगा ॥ २९ ॥ इन्द्रध्वज-पूजन आदि वृद्धोंकी कुलपरम्परासे चलनेवाली प्रथाका उन्होंने लोप किया । वे परस्त्रियोंके साथ घूमते

नग्नस्त्रीदर्शनं वह्निप्राशनं दामबन्धनम् । उन्मूलनं च यमयोर्मृत्पर्युषितसेवनम् ॥३१॥
रोदनं नवनीतार्थं मुहुर्मात्रा प्रताडनम् । गोगोपिकासु चास्नेहः पूर्वस्थलविसर्जनम् ॥३२॥
कृता रजकहत्या च युद्धं क्षत्रियवत् कृतम् । गजहत्या मल्लहत्या युद्धं मातुलमर्दनम् ॥३३॥
नैष्ठुर्यमाप्तवर्गेषु राज्यप्राप्तिस्तथैव च । नृपाज्ञावर्तनं चापि क्रीडा दास्या कुरूपया ॥३४॥
युद्धात्पराजयश्चापि रिपवे पृष्ठदर्शनम् । गिरौ दग्धः परैर्ज्ञातः स्वोयस्थलविमोचनम् ॥३५॥
अब्धितारनिवासश्च बलात्स्त्रीहरण कृतम् । भौमासुरपरद्रव्यहरणं परस्नुतः ॥३६॥
स्वीयगोत्रवधार्थं हि पांडुजायोपदेशितम् । शनैः स्तेयावरोपाश्च वृक्षार्थं सङ्गरः सुरैः ॥३७॥

कृष्णोपासक उवाच

किं त्वं जल्पसि शृण्वद्य तव रामस्य कामिनः । कस्य सा दुहिता ब्रूहि कृतः स वर्णसङ्करः ॥३८॥
शिवचापस्य भंगेन शिवस्याप्यपराधितम् । जामदग्न्यमानभङ्गकरणं मुद्गलस्य च ॥३९॥
आज्ञां विना लक्ष्मणेन तद्वल्ल्यस्त्रोटिताः शुभाः । सदारण्यचरः स्वार्थं पशुहिंसापरायणः ॥४०॥
वनाश्रमी वन्यजीवी मांसाहारी धनुर्धरः । व्याधकर्मरतः शीतपर्जन्योष्णप्रपीडितः ॥४१॥
पादगामी चर्मवासा जटावल्कलवान्नखी । श्मश्रुधारी तरुच्छायाश्रयी पात्रविवर्जितः ॥४२॥
राक्षसेन हृता पत्नी तव रामस्य कानने । पत्न्यर्थं हि कृतः शोकस्तथा दास्या प्रपूजितः ॥४३॥

रामोपासक उवाच

रामेण मोचिता पत्नी कृता छायामयी पुरा । न सा दासी तु शबरी मुनिसेवनतत्परा ॥४४॥

---

और अपनेसे बड़ी स्त्रियोंके साथ खेलते फिरते थे। वे नङ्गी नारियोंको देखते थे। उन्होंने मिट्टी खायी और कितने ही बार तो लोगोंके जूठन तक खाये थे। रस्सीसे बाँधे गये तो यमल-अर्जुन नामक दो वृक्षोंको उखाड़ डाला ॥ ३० ॥ ३१ ॥ थोड़ेसे माखनके लिए रोने लगते थे और माता यशोदाके द्वारा बार बार पीटे भी गये। अन्तमें अपनेसे अतिशय प्रेम रखनेवाली गोपिकाओंके प्रति निठुराई करके उस पवित्र वृजधामको छोड़ दिया ॥ ३२ ॥ मथुरामें रजककी हत्या की और ( ग्वाले होकर ) क्षत्रियोंके समान युद्ध किया। उन्होने गजहत्या और मल्लहत्या करके मामाकी भी हत्या की ॥ ३३ ॥ अपनोंके साथ निठुराई करके उन्होंने राज पाया। फिर भी एक दूसरे राजाकी आज्ञामें बँधकर रहे। बादमें एक कुरूप दासीके साथ क्रीड़ा की ॥ ३४ ॥ युद्ध हुआ तो उसमें पराजित होकर शत्रुको पीठ दिखायी और पर्वतपर जाकर छिपे। शत्रुओंने अपनी समझसे उन्हें जला ही दिया था। फिर अपने स्थान मथुराको छोड़कर समुद्रके किनारे जाकर रहने लगे। वहाँ भी बरबस बहुतेरी स्त्रियोंका हरण किया। भौमासुरके द्रव्योंको उन्होंने चुराया ॥ ३५ ॥ ३६ ॥ अपने भाइयों तथा कुटुम्बियोंको मारनेके लिए पाण्डवोंको उपदेश दिया। लोगोंने उन्हें स्यमन्तक मणिकी चोरी लगायी। एक वृक्षके लिए उन्होंने देवताओंके साथ संग्राम किया ॥ ३७ ॥ कृष्णोपसक बोला—क्या व्यर्थ बकवास करते हो, सुनो। आज मैं तुम्हारे कामी रामकी करनी तुम्हें सुनाता हूँ। बताओ, जिसको उन्होंने अपनी भार्या बनायी थी, वह वर्णसंकर कन्या थी या नहीं ? ॥ ३८ ॥ शिवजीका धनुष तोड़ करके शिवका अपराध किया। परशुरामका मान भङ्ग किया। मुद्गलकी आज्ञाके बिना ही लक्ष्मण द्वारा उन्होंने लतायें तोड़ मंगवाईं। जङ्गलमें इधर-उधर घूमते हुए पेट भरनेके लिए पशुहिंसा करते थे ॥ ३९ ॥ ४० ॥ बहुत दिनों तक वनमें आश्रम बनाकर रहे। वनके फल-मूल तथा मांस खाते और धनुष धारण किये बहेलियोंका काम करते रहे। सर्वदा बेचारे शीत-आतप तथा मेहके सताये रहते थे ॥ ४१ ॥ पैदल चलते, चमड़ा पहिनते, बड़े-बड़े नख तथा जटा-वल्कल धारण किये रहते थे। बड़ी-बड़ी दाढ़ी-मूँछ रखाये पेड़ोंकी छायामें रहकर समय बिताते थे। उनके पास एक पात्र भी नहीं रहता था कि जिसमें खा-पी सकें ॥ ४२ ॥ वनमें उनकी स्त्रीको एक राक्षस चुरा ले गया। उसके लिए विविध प्रकारका विलाप करते रहे और उनकी पूजा एक दासी शबरीने की ॥ ४३ ॥ रामोपासकने

जीवन्मुक्ता तत्कृपया मोक्षमाप शुचिव्रता । तव कृष्णस्य ताः पत्नीर्भोक्ष्यंत्यद्यापि शत्रवः ॥४५॥
जित्वाऽर्जुनं बलादेव हृताः पूर्वं सहस्रशः । स्त्रीजितश्च स्त्रिया दत्तः क्रयक्रीतश्च नारदात् ॥४६॥
सर्वासां कामपूर्त्यर्थं निशि निद्राविवर्जितः । बंधुभ्यां गोपिका भुक्ता मातृतुल्या वयोधिकाः ॥४७॥

कृष्णोपासक उवाच

बंधुना तव रामश्च पशुभीत्या न निद्रितः । बंधुपत्न्यर्पिता तारा सुग्रीवाय यथासुखम् ॥४८॥
वानरैश्च कृता मैत्री स्पर्शितं दुन्दुभेः शवम् । निरर्थकं हतो वाली साहाय्यं वानरैः कृतम् ॥४९॥
वानरो यस्य वै यानं वृथा ताला विदारिताः । सागरो रोधितो येन लङ्का सा ज्वालिता वरा ॥५०॥

रामोपासक उवाच

दरिद्रेण सुदाम्ना ते कृष्णेन मैत्रिकी कृता । न ज्ञेया वानरास्तेऽपि सर्वे देवांशरूपिणः ॥५१॥
कापट्येन हतो येन जरासंधो निरर्थकः । साहाय्यं सर्वदा यस्य कृतं गोपैर्व्रजे वने ॥५२॥
गोपालस्य कृतं यानं क्रीडनं सर्वदा वने । ज्वालिता येन सा काशी सुहृद्रुक्मी विरूपितः ॥५३॥
शिवभक्तेन समरः कृतो बाणेन सादरम् । शिवेनापि कृतं युद्धं चैद्येन निंदितो मुहुः ॥५४॥
परैः पौत्रौ जितौ यस्य येन स्त्रीणां परस्परम् । कृता विषमता चात्र पारिजातार्पणादिभिः ॥५५॥

कृष्णोपासक उवाच

तवापि रामपुत्रेण सुहृद्बद्धो रणे जितः । शिवभक्तदशास्येन रामेण समरः कृतः ॥५६॥
द्विजहत्या कृता येन मुनिना निंदितोऽपि यः । तथा मित्रं जितो यस्य बंधुजेन विभीषणः ॥५७॥
परगेहस्थिता पत्नी पुनर्येनाश्रिता सुखम् । नैष्ठुर्यं च कृतं पत्न्यां स्त्रीणां कामा न पूरिताः ॥५८॥

---

कहा—हमारे रामने अपनी छायामयी पत्नीको राक्षसके हाथसे छुड़ाया था। जिसको तुम दासी कह रहे हो, वह दासी नहीं, बल्कि मुनियोंकी सेवामें तत्पर शबरी थी ॥ ४४ ॥ रामचन्द्रजीकी कृपासे वह जीवन्मुक्त हो गयी और उसे मोक्ष मिल गया। किन्तु तुम्हारे कृष्णकी पत्नियोंको आज भी उनके शत्रुगण भोग रहे हैं ॥ ४५ ॥ कृष्णकी हजारों स्त्रियोंको अर्जुनसे दस्युलोग छीन ले गये थे। कृष्ण पूरे स्त्रैण थे। उनकी एक स्त्रीने तो उन्हें दान दे दिया था और बादमें उसी सत्यभामाने नारदसे उन्हें खरीदा ॥ ४६ ॥ सब स्त्रियोंकी कामपूर्तिके लिए उन्हें रात-रात भर जागना पड़ता था। दोनों भाइयोंने उन बड़ी स्त्रियोंके साथ क्रीड़ा की थी, जो माताके समान थीं ॥४७॥ कृष्णोपासकने कहा—तुम्हारे राम पशुओंके भयसे रात रात भर जागा करते थे। बड़े भाईकी स्त्री ताराको रामने बड़ी हँसी-खुशीके साथ सुग्रीवको दे दी थी। वानरोंके साथ उन्होंने मैत्री की और दुन्दुभी नामक राक्षसके शवका स्पर्श किया। वालि बेचारेको बिना किसी अपराधके मार डाला। वानरोंने उनकी सहायता की ॥ ४८ ॥ ४९ ॥ वानर ही उनकी सवारीका काम देते थे। बिना किसी प्रयोजनके उन्होंने सात ताल वृक्षोंको काटकर गिरा दिया। सागरमें पुल बनाया और सोनेकी सुन्दर लङ्कापुरी जलवा दी ॥५०॥ रामोपासक बोला—तुम्हारे कृष्णने एक दरिद्र ब्राह्मण सुदामाके साथ मित्रता की थी। जिन्हें तुम वानर कह रहे हो, वे वानर नहीं, बल्कि वानरका शरीर धारण करके सब देवता रामकी सेवाको आये थे ॥ ५१ ॥ तुम्हारे कृष्णने कपट करके व्यर्थ जरासंधका वध करवाया था। वनमें सदा गोपगण उनकी सहायता करते रहते थे ॥ ५२ ॥ उन्होंने गोपोंको अपनी सवारी बनायी और सदा वनमें इधर-उधर खेलते रहे। उन्होंने काशी नगरीको जलवा डाला और अपने सगे साले रुक्मीको कुरूप कर दिया ॥ ५३ ॥ शिवभक्त बाणासुरके साथ उन्होंने युद्ध किया और स्वयं शिवको भी उनके साथ युद्ध करना पड़ा। शिशुपालने उनकी खूब निन्दा की ॥ ५४ ॥ शत्रुओंने उनके पौत्रको जीतकर अपने वशमें कर लिया और पारिजातादिको देते समय अपनी स्त्रियोंमें भी उन्होंने भेदभाव किया ॥ ५५ ॥ कृष्णोपासकने कहा—तुम्हारे रामके बेटेने भी तो अपने ससुरको बाँध लिया और रामने शिवभक्त रावणके साथ युद्ध किया था ॥ ५६ ॥ उन्होंने ब्रह्महत्या तक कर डाली और मुनि अगस्त्यने उनकी अच्छी तरह निन्दा की। अपना काम बनानेके लिए रामने रावणके भाई विभीषणको फोड़कर मित्र

